श्रीरासमण्डले रम्या वृन्दावनविनोदिनी॥
प्रातश्चन्द्राधिदेवी त्वं नाम्ना चित्रावलीति च॥१०॥
दक्षकन्या कुत्र कल्पे कुत्र कल्पे च शैलजा॥
देवमातादितिस्त्वं च सर्वाधारा वसुन्धरा॥११॥
त्वमेव गङ्गा तुलसी त्वं च स्वाहा स्वधा सती॥
त्वदंशांशांशकलया सर्वदेवादियोषितः॥१२॥
स्त्रीरूपं चापि पुरुषं देवि त्वं च नपुंसकम्॥
वृक्षाणां वृक्षरूपा त्वं सृष्टा चाङ्कुररूपिणी॥१३॥
वह्नौ च दाहिका शक्तिर्जले शैत्यस्वरूपिणी।
सूर्ये तेजःस्वरूपा च प्रभारूपा च संततम्॥१४॥
गन्धरूपा च भूमौ च आकाशे शब्दरूपिणी।
शोभास्वरूपा चन्द्रे च पद्मसङ्घे च निश्चितम्॥

सृष्टौ सृष्टिस्वरूपा च पालने परिपालिका॥
महामारी च संहारे जले च जलरूपिणी ॥१६॥
क्षुत्त्वं दया त्वं निद्रा त्वं तृष्णा त्वं बुद्धिरूपिणी॥
तुष्टिस्त्वं चापि पुष्टिस्त्वं श्रद्धा त्वं च क्षमा स्वयम्॥
शान्तिस्त्वं च स्वयं भ्रान्तिः कान्तिस्त्वं कीर्तिरेव च।
लज्जा त्वं च तथा माया भुक्तिमुक्तिस्वरूपिणी॥१८॥
सर्वशक्तिस्वरूपा त्वं सर्वसम्पत्प्रदायिनी॥
वेदेऽनिर्वचनीयात्वं त्वां न जानाति कश्चन॥१९॥
सहस्रवक्त्रस्त्वां स्तोतुं न च शक्तः सुरेश्वरि॥
वेदाः न शक्ताः को विद्वान् न च शक्ता सरस्वती॥२०॥
स्वयं विधाता शक्तो न न च विष्णुः सनातनः॥
किं स्तौमि पंचवक्त्रेण रणत्रस्तो महेश्वरि॥२१॥
कृपां कुरु महामाये मम रक्षाभयं कुरु॥२२॥



इति श्रीदुर्गास्तोत्रः सम्पूर्णः शुभायास्तु॥

ब्रह्मा त्रिपुरसंग्रामे शंकराय ददौ पुरा ॥
जघान त्रिपुरं रुद्रो यद्धृत्वा भक्तिपूर्वकम् ॥२॥
हरो ददौ गौतमाय पद्माक्षाय च गौतमः ॥
ततो बभूव पद्माक्षः सप्तद्वीपेश्वरो जयी ॥३॥
यद्धृत्वा पठनाद् ब्रह्मा ज्ञानवाञ्छक्तिमान्भुवि ॥
शिवो बभूव सर्वज्ञो योगिनां च गुरुर्यतः ॥४॥
शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः ॥४॥
ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी ॥५॥
ब्रह्माण्डविजये चैव विनियोगः प्रकीर्तितः ॥
पुण्यतीर्थं च महतां कवचं परमाद्भुतम् ॥६॥
ॐ ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम् ॥
ॐ ह्रीं मे पातु कपालं च ॐ ह्रीं श्रीं इति लोचने ॥७॥

ॐ अथ श्रीदुर्गाकवचम्॥

ॐ ह्रें ह्रीं श्रीं हुं दुर्गतिहारिण्यै दुर्गायै नमः॥

ॐ अस्य श्रीब्रह्माण्डविजयस्य श्रीदुर्गाकवच-
स्य प्रजापतिः ऋषि गायत्री छन्दः दुर्ग-
तिनाशिनी दुर्गादेवी देवता आत्मनो वाक्
मनः कायोपार्जितपापनिवारणार्थे धर्मा-
र्थकाममोक्षार्थे ब्रह्माण्डविजये च दुर्गाक-
वचपाठे जपे वा विनियोगः॥ ॐ॥

ॐ नारायण उवाच॥

ॐ शृणु नारद वक्ष्यामि दुर्गायाः कवचं शुभम्॥
श्रीकृष्णेनैव यद् दत्तं गोलोके ब्रह्मणे पुरा॥१॥

ब्रह्मा त्रिपुरसंग्रामे शंकराय ददौ पुरा ॥
जघान त्रिपुरं रुद्रो यद्धृत्वा भक्तिपूर्वकम् ॥ २ ॥
हरो ददौ गौतमाय पद्माक्षाय च गौतमः ॥
ततो बभूव पद्माक्षः सप्तद्वीपेश्वरो जयी ॥ ३ ॥
यद्धृत्वा पठनाद् ब्रह्मा ज्ञानवाञ्छक्तिमान्भुवि ॥
शिवो बभूव सर्वज्ञो योगिनां च गुरुर्यतः ॥ ४ ॥
शिवतुल्यो गौतमश्च बभूव मुनिसत्तमः ॥ ४ ॥
ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी ॥ ५ ॥
ब्रह्माण्डविजये चैव विनियोगः प्रकीर्तितः ॥
पुण्यतीर्थं च महतां कवचं परमाद्भुतम् ॥ ६ ॥
ॐ ह्रीं दुर्गतिनाशिन्यै स्वाहा मे पातु मस्तकम् ॥
ॐ ह्रीं मे पातु कपालं च ॐ ह्रीं श्रीं इति लोचने ॥ ७ ॥

पातु मे कर्णयुग्मं च ॐ दुर्गायै नमः सदा।
ॐ ह्रीं श्रीमिति नासे मे सदा पातु च सर्वदा॥८॥
ह्रीं श्रीं हूमिति दन्तानि पातु क्लीमोष्ठयुग्मकम्।
क्रीं क्रीं क्रीं पातु कण्ठं च दुर्गे रक्षतु गण्डकम्॥९॥
स्कन्धौ दुर्गविनाशिन्यै स्वाहा पातु निरन्तरम्।
वक्षो विपद्विनाशिन्यै स्वाहा मे पातु सर्वतः॥१०॥
दुर्गे दुर्गे रक्षिणीति स्वाहा नाभिं सदावतु॥
दुर्गे दुर्गे रक्ष रक्ष पृष्ठं मे पातु सर्वतः॥११॥
ॐ ह्रीं दुर्गायै स्वाहा च हस्तौ पादौ सदावतु॥
ॐ ह्रीं दुर्गायै स्वाहा च सर्वाङ्गं मे सदावतु॥१२॥
प्राच्यां पातु महामाया आग्नेय्यां पातु कालिका।
दक्षिणे दक्षकन्या च नैरृत्यां शिवसुन्दरी॥१३॥

पश्चिमे पार्वती पातु वाराही वारुणे सदा।
कुवेरमाता कौबेर्यां मे पा न्यामीश्वरी सदा ॥१४॥
ऊर्ध्वे नारायणी पातु अम्बिकाधः सदावतु ॥
ज्ञाने ज्ञानप्रदा पातु स्वप्ने निद्रा सदावतु ॥१५॥
इति ते कथितं वत्स सर्वमंत्रौघविग्रहम् ॥
ब्रह्माण्डविजयं नाम कवचं परमाद्भुतम् ॥१६॥
सुस्नातः सर्वतीर्थेषु सर्वयज्ञेषु यत् सदा ॥
सर्वव्रतोपवासे च तत् फलं लभते नरः ॥१७॥
गुरुमभ्यर्च्य विधिवत् वस्त्रालंकारचन्दनैः ॥
कण्ठे वा दक्षिणे बाहौ कवचं धारयेत् तु यः ॥१८॥
स च त्रैलोक्यविजयी सर्वशत्रुप्रमर्दकः ॥
इदं कवचमज्ञात्वा भजेत् दुर्गतिनाशिनीम् ॥१९॥

दायकः

प्रातरुत्थाय प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः
कवचं कथयिष्यामि इह नारद सत्तम॥
यस्मै कस्मै न दातव्यं गोपनीयं सुदुर्लभम्॥
॥ॐ॥ इति श्रीदुर्गा कवचः सम्पूर्णः
सपरिवारः सवाहनः साङ्गः सायुधः
प्रीयतां प्रीतोऽस्तु॥ ॐ॥

॥ ॐ ॥

॥ शुभं भवतु ॥

॥

॥ श्रीमहागायत्रीकवचम् ॥

ॐ श्रीमहागायत्र्यै नमः ॥

ॐ श्रीमहागायत्र्यै, परमगुह्यायै, ब्रह्मविष्णु-
महेश्वरस्वरूपिन्यै, परब्रह्मकलायै, शक्त्यै,
मोक्षप्रदायै सर्वार्थकाममोक्षप्रदायिन्यै,
भुवनेश्वर्यै वैष्णव्यै नमो नमः ॥ ॐ ॥

ॐ अस्य श्रीमहागायत्रीकवचस्य ब्रह्म-
विष्णुमहेश्वरा ऋषयः ऋग्यजुःसामाथ-
र्वः छन्दांसि ब्रह्मरूपा परमकला गायत्री
देवता तद्बीजं भर्ग इति शक्तिः धियः
इति कीलकं धर्मार्थकाममोक्षार्थे जपे
(पाठे वा) विनियोगः ॥ ॥ ॐ तत्

ॐ महागायत्र्यै सावित्र्यै सरस्वत्यै नमः॥
ॐ श्री नारायण उवाच॥
अस्त्येकं परमं गुह्यं गायत्रीकवचं तथा।
पठनाद्धारणान्मर्त्यः सर्वपापैः प्रमुच्यते॥१॥
सर्वकामानवाप्नोति देवीरूपश्च जायते।
गायत्रीकवचस्यास्य ब्रह्मविष्णुमहेश्वराः॥२॥
ऋषयो ऋग्यजुःसामाथर्वच्छन्दांसि नारद।
ब्रह्मरूपा देवतोक्ता गायत्री परमा कला॥३॥
तद्बीजं भर्ग इत्येषा शक्तिरुक्ता मनीषिभिः॥
कीलकं च धियः प्रोक्तं मोक्षार्थं विनियोजनम्॥४॥
चतुर्भिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम्॥
चतुर्भिः स्याच्छिखा पश्चात्त्रिभिस्तु कवचं स्मृतम्।
॥५॥

चतुर्भिर्नेत्रमुदिष्टं चतुर्भिः ह्यन्तदमन्त्रकम्॥
अथ ध्यानं प्रवक्ष्यामि सर्वकामेष्टदायकम्॥८॥

अथ ध्यानम्॥
॥ ॐ ॥

ॐ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्री-
क्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्वार्थ
वर्णात्मिकाम्॥ गायत्रीं वरदाभयाङ्कुशकशाः
शुभ्रं कपालं गुणं शंखं चक्रमथारविन्दयुग-
लं हस्तैर्वहन्तीं भजे॥
ॐ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी॥
गायत्रीच्छन्दसां माता ब्रह्मयोनी नमोऽस्तु ते॥॥
गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे।

ब्रह्मसंध्या तु मे पश्चाद् उत्तरायां सरस्वती॥८॥
पार्वती मे दिशं रक्षेत् पावकी जलशायिनी॥
यातुधानी दिशं रक्षेद् यातुधानभयंकरी॥९॥
पावमानी दिशं रक्षेत् पवमानविलासिनी॥
दिशं रौद्रीं च मे पातु रुद्राणी रुद्ररूपिणी॥१०॥
ऊर्ध्वं ब्रह्माणि मे रक्षेद् अधस्ताद् वैष्णवी तथा।
एवं दश दिशो रक्षेत् सर्वाङ्गं भुवनेश्वरी॥११॥
तत्पदं पातु मे पादौ जङ्घे मे सवितुः पदम्॥
वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च॥१२॥
देवस्य मे तद्धृदयं धीमहीति च गल्लयोः॥
धियः पदं च मे नेत्रे यः पदं मे ललाटकम्॥१३॥
नः पदं पातु मे मूर्ध्नि शिखायां मे प्रचोदयात्॥
तत्पदं पातु मूर्धानं सकारः पातु भालकम्॥१४॥

चक्षुषी तु विकारार्णौ स्तुकारस्तु कपोलयोः।
नासापुटं वकारार्णौ रेकारस्तु मुखे तथा॥१५॥
णिकार ऊर्ध्वमोष्ठं तु यकारस्त्वधरोष्ठकम्॥
आस्यमध्ये भकारार्णौ णीकारश्चुबुके तथा॥१६॥
देकारः कण्ठदेशे तु वकारः स्कन्धदेशकम्॥
ह्यकारो दक्षिणे हस्ते धीकारो वामहस्तकम्॥१७॥



मकारो हृदयं रक्षेत हिकारो उदरे तथा।
धिकारो नाभिदेशे तु योकारस्तु कटिं तथा॥१८॥
गुह्यं रक्षतु योकार ऊरू द्वौ नः पदाक्षरम्॥
प्रकारो जानुनी रक्षेत् चोदकारो जङ्घ देशकम्॥१९॥
दकारं गुल्फदेशे तु यकारः पादयुग्मकम्॥
तकारं व्यंजनं चैव सर्वांग मे सदाऽवतु॥२०॥
इदं तु कवचं दिव्यं बाधाशतविनाशिनम्॥
चतुः षष्ठि कलाविद्या दायकं मोक्षकारकम्॥२१॥
मुच्यते सर्वपापेभ्यः परंब्रह्माधिगच्छति॥
पठनाच्छ्रवणाद्वापि गो सहस्रफलं लभेत॥
ॐ इति श्री देवीभागवते महापुराणे द्वादश
स्कन्धे महागायत्रीकवचः सम्पूर्णः सपरिवारः
सवाहनः साङ्गः सायुधः प्रीयतां ॐ ॐ
प्रीतोऽस्तु॥ २॥

अथ महागायत्री हृदयम्॥

ॐ नारद उवाच॥

भगवन्देव देवेश भूतभव्यजगत्प्रभो।
कवचं च श्रुतं दिव्यं गायत्रीमन्त्रविग्रहम्॥१॥
अधुना श्रोतुमिच्छामि गायत्रीहृदयं परम्।
यद्धारणाद्भवेत्पुण्यं गायत्रीजायतेऽखिलम्॥२॥

ॐ श्रीनारायण उवाच॥

देव्याश्च हृदयं प्रोक्तं नारदाथर्वणस्फुटम्।
तदेवाहं प्रवक्ष्यामि रहस्यातिरहस्यकम्॥३॥
विराड्रूपां महादेवीं गायत्रीं वेदमातरम्॥
ध्यात्वा तस्यास्त्वथांगेषु ध्यायेदेताश्च देवताः॥४॥
पिण्डब्रह्मांडयोरैक्याद्भावयेत् स्वतनौ तथा।
देवीरूपे निजे देहे तन्मयत्वाय साधकः॥५॥

नादेवोऽभ्यर्चयेद्देवमिति वेदविदो विदुः॥
ततो भेदाय कायस्थे भावयेद्देवता इमाः॥६॥
अथ तत्संप्रवक्ष्यामि तन्मयत्वमथो भवेत्।
गायत्रीहृदयस्यास्याऽप्यहमेव ऋषिः स्मृतः॥७
गायत्रीच्छन्द उद्दिष्टं देवता परमेश्वरी॥
पूर्वोक्तेन प्रकारेण कुर्यादङ्गानि षट् क्रमात्॥८॥
आसने विजने देशे ध्यायेदेकाग्रमानसः॥८॥
अर्थाथन्यासः। द्यौर्मूर्ध्नि दैवतम्। दन्तपंक्तौ
वश्विनौ॥ उभे संध्ये चोष्ठौ। मुखमग्निः॥
जिह्वा सरस्वती। ग्रीवायां तु बृहस्पतिः॥
स्तनयोर्वसवोऽष्टौ। बाह्वोर्मारुतः॥ हृदये
पर्जन्यः। आकाशमुदरम्॥ नाभाव
न्तरिक्षम्। कट्योरिन्द्राग्नी। जघने

विज्ञानघनः प्रजापतिः। कैलास मलये ऊरु॥
विश्वेदेवा जान्वोः। जंघायां कौशिकः॥
गुह्यमयने। ऊरू पितरः। पादौ पृथिवी॥
वनस्पतयोऽङ्गुलीषु। ऋषयो रोमानि।
नखानि मुहूर्तानि। अस्थिषु ग्रहाः। असृङ्
मांसमृतवः। संवत्सरा वै निमिषम्। अहोरात्रो
वादित्यश्चन्द्रमाः। प्रवरां दिव्यां गायत्री
सहस्रनेत्रां शरणमहं प्रपद्ये। ऊँ तत्सवितु-
र्वरेण्याय नमः। ऊँ तत्पूर्वजयाय नमः। ऊँ
तत्प्रातरादित्याय नमः। ऊँ तत्सायं प्रातरादित्य
प्रतिष्ठाय नमः। प्रातरधीयानो दिवस-
कृतं पापं नाशयति। सायं प्रातरधीया
नो अपापो भवति। सर्वतीर्थेषु स्नातो भवति

सोमवार १६ अप्रैल चैत्र सुदी १४

सर्वैर्देवैर्ज्ञातो भवति। अवाच्यवचनात्पूतो भवति। अभक्ष्य भक्षणात्पूतो भवति। अभोज्य भोजनात्पूतो भवति। अचोष्यचोषणात्पूतो भवति। असाध्यसाधनात् पूतो भवति॥ दुष्प्रतिग्रह शतसहस्रात्पूतो भवति॥ सर्वप्रतिग्रहात्पूतो भवति। पंक्तिदूषणात्पूतो भवति। अनृतवचनात्पूतो भवति। अथाऽब्रह्मचारी ब्रह्मचारी भवति। अनेन हृदयेनाधीतेन क्रतुसहस्रेणेष्टं भवति। षष्टिसहस्र गायत्र्या जप्यानि फलानि भवन्ति। अष्टौ ब्राह्मणान्सम्यग्ग्राहयेत्। तस्य सिद्धिर्भवति। य इदं नित्यम-

धीयानो ब्राह्मणः प्रातः शुचिः सर्वपापैः
प्रमुच्यत इति। ब्रह्मलोके महीयते। इत्याह
भगवान् श्रीनारायणः ॥
ॐ इति श्री देवीभागवते महापुराणे
द्वादशस्कन्धे गायत्रीहृदयः सम्पूर्णः
सपरिवारः सवाहनः साङ्गः सायुधः
प्रीयतां प्रीतोऽस्तु ॥
ॐ हरि ॐ तत्सत् तत्सत् हरि ॐ ॥
इति शुभाय भवतु ॥
॥ ॐ ॥

ॐ अथ सयंत्रं श्री इन्द्राक्षी कवचं
स्तोत्रं च ॥
ॐ श्रीमहागणेशाय नमो नमः ॥ १ ॥
ॐ नम इन्द्राक्ष्यै भगवत्यै ॥
मूषकवाहन मोदकहस्त
चामरकर्ण विलम्बितसूत्र ॥
वामनरूप महेश्वरपुत्र
विघ्नविनायक पाद नमस्ते ॥ १ ॥
ॐ अथ श्री इन्द्राक्षी यंत्रम् ॥



ॐ अथ श्री इन्द्राक्षी स्तोत्र वक्ष्ये ॥

ॐ अस्य श्री इन्द्राक्षीस्तोत्रमहामंत्रस्य प्राचीपुरन्दर ऋषिः, अनुष्टुप् छन्दः, इन्द्राक्षी दुर्गा देवता, लक्ष्मी बीजम्, भुवनेश्वरी शक्तिः भवानीति कीलकम्, मम इन्द्राक्षीप्रसाद सिद्ध्यर्थे पाठे (जपे वा) विनियोगः ॥

अथ करन्यासः ॥

ॐ इन्द्राक्षीत्यङ्गुष्ठाभ्यां नमः । ॐ महालक्ष्मीरिति तर्जनीभ्यां नमः । ॐ माहेश्वरीति मध्यमाभ्यां नमः । ॐ अम्बुजाक्षीति अनामिकाभ्यां नमः । ॐ कात्यायनीति कनिष्ठिकाभ्यां नमः । ॐ कौमारीति करतलकरपृष्ठाभ्यां नमः ॥

अथ षडङ्गन्यासः ।

ॐ इन्द्राक्षीति हृदयाय नमः। ॐ महालक्ष्मी रिति शिरसे स्वाहा। ॐ माहेश्वरीति शिखायै वषट्। ॐ अम्बुजाक्षीति कवचाय हुम्। ॐ कात्यायनीति नेत्रत्रयाय वौषट्। ॐ कौमारीत्यस्त्राय फट्॥

ॐ भूर्भुवस्स्वरोमिति दिग्बन्धः॥

प्राणायामः

अथ ध्यानम्॥

नेत्राणां दशभिश्शतैः परिवृतामत्युच शोम्बराम्, हेमाभां महतीं विलम्बितशिखामामुक्तकेशान्विताम्॥ घण्टामण्डितपादपद्मयुगलां नागेन्द्रकुम्भस्तनीम्, इन्द्राक्षीं परिचिन्तयामि मनसा कल्पोक्तसि-द्धिप्रदाम्॥ ॐ॥

॥ध्यानम्॥

ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्र द्वयान्विताम्।
वामे हस्ते वज्रधरां दक्षिणेन वरप्रदाम्॥१॥
इन्द्रादिभिः सुरैर्वन्द्यां वन्दे शंकरवल्लभाम्॥
एवं ध्यात्वा महादेवीं जपेत् सर्वार्थसिद्धये॥२॥
इन्द्राक्षीं नौमि युवतीं नानालंकारभूषिताम्।
प्रसन्नवदनाम्भोजामप्सरोगणसेविताम्॥३॥

नोटः—
इन्द्राक्षीति हृदयाय नमः—से—अप्सरोगणसेविताम्—तक दो बार पढना या जप करना चाहिए। ३४।

। २४६ ।



ॐ श्री इन्द्र उवाच॥
इन्द्राक्षी पूर्वतः पातु पात्वाग्नेय्यां दशेश्वरी।
कौमारी दक्षिणे पातु नैरृत्यां पातु पार्वती॥१॥
वाराही पश्चिमे पातु वायव्ये नारसिंह्यपि॥
उदीच्यां कालरात्री मामैशान्यां सर्वशक्तयः॥२॥
भैरव्यूर्ध्वं सदा पातु पात्वधो वैष्णवी सदा।
एवं दशदिशो रक्षेत् सर्वाङ्गं भुवनेश्वरी॥३॥

अथ श्री इन्द्राक्षीकवचम्॥
ॐ नमो भगवत्ये इन्द्राक्ष्यै सर्वजनवशंकर्यै सर्वदुष्टग्रहस्तम्भिन्यै स्वाहा॥१॥
ॐ नमो भगवति, पिङ्गलभैरवि, त्रैलोक्यलक्ष्मि, त्रैलोक्यमोहिनीन्द्राक्षि मां रक्ष रक्ष हुं फट् स्वाहा॥२॥

ॐ नमो भगवति भद्रकालि महादेवि कृष्णवर्णे
तुङ्गस्तनि शूर्पहस्ते कवाट वक्षः स्थले
कपालधरे परशुधरे चापधरे विकृतरूप-
धरे विकृतरूपे महाकृष्णसर्पयज्ञोपवीतिनि
भस्मोद्धूलितसर्वगात्रोन्द्राक्षि मां रक्ष रक्ष
हुं फट् स्वाहा ॥ ३ ॥
ॐ नमो भगवति प्राणेश्वरि पद्मासने सिंहवा-
हने महिषासुरमर्दिनि, उष्णज्वर पित्तज्वर
वातज्वर श्लेष्मज्वर कफज्वर सन्निपातज्वर
कृत्रिमज्वर कृत्तिकादिज्वरै काहिकज्वर
द्व्याहिकज्वर त्र्याहिकज्वर चतुराहिक-
ज्वर पंचाहिकज्वर पक्षज्वर मासज्वर

षण्मासज्वर संवत्सरज्वर सर्वाङ्गज्वरान्
नाशय नाशय हर हर जहि जहि
दह दह पच पच ताडय ताडयाकर्ष-
याकर्षय विद्विष! स्तम्भय स्तम्भय
मोहय मोहय उच्चाटय उच्चाटय हुं
फट् स्वाहा॥४॥
ॐ ह्रीं ॐ भगवति प्रत्यङ्गिरे पद्मा-
सने लम्बोष्ठि, कम्बुकण्ठिके, कालि
कामरूपिणि, परमंत्र परयंत्र परतं-
त्रप्रभेदिनि, प्रतिपक्षविध्वंसिनि, पर-
बलदुर्गविमर्दिनि शत्रुकरच्छेदिनि
सकलदुष्टज्वरनिवारिणि, भूत प्रेत -

पिशाचब्रह्मराक्षसयक्षयमदूतशाकिनी-
डाकिनीकामिनीस्तम्भिनीमोहिनी-
वशंकरीकुक्षिरोगशिरोरोगनेत्ररोग-
क्षयापस्मारकुष्ठादि महारोगनिवारिणि
मम सर्वरोगान् नाशय नाशय ह्रां ह्रीं
ह्रूं ह्रैं ह्रौं ह्रः हूं फट् स्वाहा॥ ५॥
ॐ ह्रीं श्रीं हूं ॐ इन्द्राक्षि मां रक्ष रक्ष
मम शत्रून् नाशय नाशय जलरोगान्
शोषय शोषय दुःखव्याधीन् स्फोटय
स्फोटय क्रूरान्‌रीन् भञ्जय भंजय मनो
ग्राहि प्राणग्राहि शिरोग्रन्थीन् नाशय
कोटय कोटय इन्द्राक्षि मां रक्ष रक्ष
हूं फट् स्वाहा॥ ६॥

ॐ नमो भगवति माहेश्वरि महाचिन्ता
मणि ह्रीं सकलसिद्धेश्वरि सकलजन
मनोहारिणि, कालकालरात्रि, अनले
अजिते अभये महाघोररूपे विश्वरूप-
पिणि मधुसूदनि, महाविष्णुस्वरूप-
पिणि, नेत्रशूल कर्णशूल कटिशूल पक्ष-
शूल पाण्डुरोग कमलादीन् नाशय
नाशय वैष्णवि ब्रह्मास्त्रेण, विष्णु-
चक्रेण रुद्रशूलेन यमदण्डेन वरुण-
पाशेन, वासववज्रेण सर्वान्नरीन्
भंजय भंजय यक्षग्रह राक्षसग्रह
स्कन्धग्रह विनायकग्रह बालग्रह-

चौरग्रह कूष्माण्ड ग्रहादीन् निकृन्त निकृन्त, राजयक्ष्मक्षयरोगतापज्वर-
निवारिणि मम सर्वज्वरान् नाशय
नाशय सर्वग्रहान् उच्चाटय उच्चाटय
हुं फट् स्वाहा ॥७॥ ॐ ॥

ॐ

ॐ अथ इन्द्राक्षी स्तोत्रम् ॥

ॐ इन्द्राक्षीं द्विनेत्रां पाशांकुशधरां पराम् ॥
द्विभुजां सिंहमध्यस्थां भजेऽहमभयंकरीम् ॥
जयन्ती मङ्गलाकाली भद्रकाली कपालिनी ॥
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा
नमोऽस्तु ते ॥२॥

अग्निज्वाला रौद्रमुखी कालरात्री तपस्विनी॥३॥

29 APRIL 1973 SUNDAY

Saka 9 Baisakh 1895

रविवार २९ अप्रैल वैसाख बदी ११

ॐ श्री इन्द्र उवाच॥

इन्द्राक्षी नाम सा देवी देवतैः समुदाहृता।
गौरी शाकम्भरी देवी दुर्गा नाम्नेति विश्रुता॥
कात्यायनी महादेवी चन्द्रघण्टा महातपाः॥
सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी॥२॥
नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला॥
मेघस्वना सहस्राक्षी विकटाङ्गी जलोदरी॥॥
महोदरी मुक्तकेशी घोररूपा महाबला॥४॥
अजिता भद्रदाऽनन्दा रोगहर्त्री शिवप्रिया॥
शिवदूती कराली च प्रत्यक्ष परमेश्वरी॥ ५॥
इन्द्राणी इन्द्ररूपा च इन्द्रशक्तिः परायणा॥५॥
सदा सम्मोहिनी देवी सुन्दरी भुवनेश्वरी॥६॥

एकाक्षरी पराब्राह्मी स्थूलसूक्ष्मप्रवर्तिनी।
नित्यं सकलकल्याणी भोगमोक्षप्रदायिनी॥७॥
महिषासुरसंहर्त्री चामुण्डा सप्तमातृका।
वाराही नारसिंही च भीमा भैरवनादिनी॥८॥
श्रुतिः स्मृतिर्धृतिर्मेधा विद्यालक्ष्मीसरस्वती।
अनन्ता विजयापर्णा मानस्तोकापराजिता॥९॥
भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा।
शिवा भवानी रुद्राणी शंकरार्द्धशरीरिणी॥१०॥
ऐरावतगजारूढा वज्रहस्ता वरप्रदा।
भ्रामरी काञ्चिकामाक्षी क्वणन्माणिक्यनूपुरा॥
त्रिपाद् भस्मप्रहरणा त्रिशिरा रक्तलोचना॥
शिवा च शिववरदा च शिवभक्तिपरायणा॥१२॥

स्तुत्युया महामाया सर्वरोगनिवारिणी ॥
ऐन्द्री देवी सदाकालं शान्तिमाशु करोतु मे ॥१॥

ॐ महायुधाय विद्महे,
रक्तनेत्राय धीमहि -
तन्नो ज्वरहरः प्रचोदयात् ॥
इति गायत्री कवचस्य ॥

ॐ अथ पुष्पफलं कथयते ॥

एतत् स्तोत्रं जपेन्नित्यं सर्वव्याधिनिवारकम् ।
रणे राजभये घोरे सर्वत्र विजयी भवेत् ॥१॥
एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता ।
सा मे प्रीत्या सुखं दद्यात् सर्वापत्तिनिवारिणी ॥२॥

ज्वरं भूतज्वरं चैव शीतोष्णज्वरमेव च ।
ज्वरं ज्वरातिसारं च अतिसारज्वरं हर ॥३॥
प्रातरावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् ॥
आवर्तयन् सहस्रं तु लभते वाञ्छितं फलम् ॥४॥
एतत्स्तोत्रमिदं पुण्यं जपेत् आयुष्यवर्द्धनम् ॥
विनाशाय च रोगाणामपमृत्युहराय च ॥५॥
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥६॥
अनेन इन्द्राक्षी कवच स्तोत्र पाठेन
श्री इन्द्राक्षी भगवती सम्पूर्णा सपरिवारा
साङ्गा सवाहना सायुधा प्रीयतां
प्रीताऽस्तु ।

ॐ अथ श्रीसारस्वतीकवचम् ॥

ॐ श्री महासरस्वत्यै श्रुतिसारायै श्रुति-
पूजितायै विद्याप्रदायै सर्वजाड्यापहायै
सर्वतत्त्वज्ञानदायै सर्वार्थसाधकायै वाग्देव-
तायै अक्षरस्वरूपिण्यै पुस्तकवासिन्यै
वागवादिन्यै विद्याधिष्ठात्र्यै सर्वलोका-
धिष्ठात्र्यै ग्रन्थबीजायै ग्रन्थरूपायै
सरस्वत्यै भगवत्यै नमो नमः ॥

विनियोगः ॥

ॐ अस्य श्री सर्वपूजितस्य सरस्वतीकव-
चस्य विप्रेन्द्रः प्रजापतिः ऋषिः बृह-
स्पतिः छन्दः प्रभु: रामेश्वर! देवता:
सर्वार्थसाधनेषु सर्वासु कवितासु च

सर्वतत्त्वपरिज्ञानं प्राप्त्यर्थे मनोकामना-
सिद्ध्यर्थे सर्वजाड्यापहरणे पाठे जपे-
वा विनियोगः ॥

॥ अथ ध्यानम् ॥

ॐ सरस्वति महाभागे विद्ये कमललोचने।
विश्वरूपि विशालाक्षि विद्यां देहि सरस्वति॥ ॐ

ॐ श्री ब्रह्मा उवाच ॥

शृणु वत्स प्रवक्ष्यामि कवचं सर्वकामदम् ॥
श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम् ॥१॥
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने ॥
रासेश्वरेण विभुना रासे वै रासमण्डले ॥२॥

अतीवगोपनीयं च कल्पवृक्षसमं परम्॥
अद्भुताद्भुतमंत्राणां समूहैश्च समन्वितम्॥३॥
यद्धृत्वा पठनाद्ब्रह्मन् बुद्धिमांश्च बृहस्पतिः।
यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः॥४॥
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको मुनिः।
स्वायम्भुवो मनुश्चैव यद्धृत्वा सर्वपूजितः॥५॥
कणादो गौतमः कण्वः पाणिनिः शाकटायनः॥
ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम्॥
धृत्वा वेदविभागं च पुराणान्यखिलानि च॥
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम्
शातातपश्च संवर्तो वसिष्ठश्च पराशरः॥
यद्धृत्वा पठनाद्ग्रन्थं याज्ञवल्क्यश्चकार सः॥८॥

ऋष्यशृंगो भारद्वाजश्चास्तीको देवलस्तथा।
जैगीषव्योऽथ जाबालि यद्दत्वा सर्वपूजित:॥ ९॥
कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापति:॥
स्वयं बृहस्पतिश्छन्दो देवो रामेश्वर: प्रभु:॥१०॥
सर्वतत्वपरिज्ञाने सर्वार्थसाधनेषु च॥
कवितासु च सर्वासु विनियोग: प्रकीर्तित:॥११॥
ॐ ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वत:॥
श्रीं वाग्देवतायै स्वाहा भालं मे सर्वदावतु॥१२॥
ॐ सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम्॥
ॐ श्रीं ह्रीं भारत्यै स्वाहा नेत्रयुग्मं सदावतु॥१३॥
ॐ ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्वतोऽवतु॥
ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा ओष्ठं सदावतु॥१४॥

ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपंक्तिः सदावतु।।
ऐं मित्येकाक्षरो मंत्रो मम कण्ठं सदावतु।।१५।।
ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धौ मे श्रीः सदावतु।।
श्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदावतु।।१६।
ॐ ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाभिकाम्।।
ॐ ह्रीं ह्रीं वाण्यै स्वाहेति मम पृष्ठं सदावतु।।१७।।
ॐ सर्ववर्णात्मिकायै पादयुग्मं सदावतु।।
ॐ रागाधिष्ठातृदेव्यै सर्वांगं मे सदावतु।।१८।।
ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदावतु।।
ॐ ह्रीं जिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु।।१९।।
ॐ ऐं ह्रीं श्रीं सरस्वत्यै बुधजनन्यै स्वाहा।।
सततं मंत्रराजोऽयं दक्षिणे मे सदावतु।।२०।।

ॐ ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैर्ऋत्यां मे सदावतु ॥
कविजिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥२१॥
ॐ सदाम्बिकायै स्वाहा वायव्यां मां सदावतु ॥
ॐ गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥२२॥
ॐ सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदावतु ॥
ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदावतु ॥२३॥
ॐ ग्रन्थबीजरूपायै स्वाहा मां सर्वतोऽवतु ॥
ऐं ह्रीं पुस्तकवासिन्यै स्वाहाधो मां सदावतु ॥२४॥
इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम् ॥
इदं विश्वजयं नाम कवचं ब्रह्मरूपिणम् ॥२५॥
पुराश्रुतं धर्मवक्त्रात् पर्वते गन्धमादने ॥
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित् ॥
॥२६॥

गुरुमभ्यर्च्य विधिवत वस्त्रालंकारचन्दनैः।
प्रणम्य दण्डवत भूमौ कवचं धारयेत्सुधीः॥२७॥
पंचलक्षजपेनैव सिद्धं तु कवचं भवेत॥
यदि स्यात्सिद्धकवचो बृहस्पतिसमो भवेत॥२८॥
महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत॥
प्राप्नोति सर्वं जेतुं सः कवचस्य प्रसादतः॥२९॥
इति ते काण्वशाखोक्तं कथितं कवचं मुने॥
स्तोत्रं पूजाविधानं च ध्यानं च वन्दनं तथा॥३०॥
इति श्री ब्रह्मवैवर्ते महापुराणे प्रकृतिखण्डे
नारायणनारद संवादे श्रीसरस्वतीकवचं
सम्पूर्णं: सपरिवार: सवाहनः सायुधः
साङ्गः: प्रीयतां प्रीतोऽस्तु॥ ३०॥
इति शुभं भूयाल्लेखकस्य॥



शुभं भवतु॥

॥ ॐ ॥ अथ भवानीनामसहस्रस्तोत्रम् ॥ ॐ ॥

ॐ नमो दुर्गार्तिनाशिन्यै दुर्गायै जगदम्बिकायै अम्बायै जगत्कल्याणकारिण्यै दुःखहारिण्यै निष्कारणवैरनाशिन्यै मायायै शरण्यै शरणागतवत्सलायै महामायायै भवान्यै ॥ ॐ ॥

अरिशङ्खकृपाणखेटबाणान् सुधनुः शूलकतर्जनी दधाना ॥ भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ १ ॥

ॐ शंखत्रिशूलशरचापकरां त्रिनेत्रां, तिग्मेतरांशुकलया विलसत्किरीटाम् ॥ सिंहस्थितामसुरसिद्धनुतां च दुर्गां

दूर्वानिभां दुरितदुःखहरां नमामि ॥ २॥
सकलकुलपतन्ती चक्रमध्ये स्फुरन्ती ।
मधुरमधु पिबन्ती कण्टकान्भक्षयन्ती ॥ ३
दुरितमपहरन्ती साधकान्पोषयन्ती ।
जयति जगति देवी सुन्दरी क्रीडयन्ती ॥ ४
चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् ॥
खड्गपाशक्रियधरां देवीं वरदाभयपाणिकाम् ॥ ५
प्रेतहस्तां महाहारीं भुजगोपवीतिनीम् ।
भवानीं कालसंहारबद्धमुद्राविभूषिताम् ॥
जगत्स्थितिकरीं ब्रह्माविष्णुरुद्रादिभिः स्तुतैः ॥
स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥

नमो भवान्यै !

कैलासशिखरे रम्ये देवदेवं महेश्वरम्।
ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम्॥
सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम्॥
प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत॥

ॐ श्री नन्दिकेश्वर उवाच॥

देवदेव जगन्नाथ संशयोऽस्ति महान्मम॥
रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सल॥
देवतायास्त्वया कस्याः स्तोत्रमेतद् दिवानिशम्।
पठ्यते विरतं नाथ त्वत्तः किमपरः परः॥
इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः॥
प्रोवाच भगवानेको विकसन्नेत्रपंकजः॥

ॐ श्रीभगवानुवाच ॥

साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत् ॥
स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत् ॥
पुरा कल्पक्षये लोकान् सिसृक्षुर्मूढचेतना ॥
गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥
तस्यामहं सुतो जातस्त्वेतैर्महदादिभिः ॥
वेदनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी ॥
हेतुः संकल्पजालस्य मनोधिष्ठात्री शुभा ॥
इच्छेति परमा शक्तिरुन्मिमील ततः परम् ॥
ततो वागिति विख्याता शक्तिः शब्दमयी परा ॥
प्रादुरासीज्जगन्माता वेदमाता सरस्वती ॥
ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा ॥

सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी।
तयैतत्सृज्यते विश्वमनाधारं च धार्यते।
तयैतत्पाल्यते सर्वं तस्यामेव प्रलीयते॥
अर्चिता प्रणता ध्याता सर्वभाव विनिश्चिता॥
आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी।
तस्या अनुग्रहादेव तामेव स्तुतवानहम्॥
सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः॥
स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा॥
तदारभ्य मया प्राप्तमैश्वर्यं पदमुत्तमम्॥
तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम्।
ससुरासुरगन्धर्वयक्षराक्षसमानवम्॥
सपन्नगं ससमुद्रं सशैलवनकाननम्॥

15 MAY 1973 TUESDAY

Saka 25 Baisakh 1895

मंगलवार १५ मई बैसाख सुदी १३

सराशिग्रहनक्षत्रं पंचभूतगुणान्वितम्॥
नन्दि ग्रामसुहस्तेन स्तवेनानेन सर्वदा॥
स्तुवे परापरां शक्तिं समानुग्रहकारिणीम्॥
इत्युक्तोपरते देवं चराचरगुरुं विभुम्।
प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम्।

ॐ श्री नन्दिकेश्वर उवाच॥

भगवन्देवदेवेश लोकनाथ जगत्पते॥
भक्तोऽस्मि तव दासोऽस्मि प्रसादः क्रियतां मयि।
देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि॥
श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य
तु॥ ॐ॥



॥

ॐ श्री भगवानुवाच ॥

शृणु नन्दिन्महाभाग स्तवराजमिमं शुभम्।
सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम्।
शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः॥
त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः॥

॥ विनियोगः ॥

ॐ अस्य श्रीभवानीनामसहस्रस्तवराजस्य महादेव ऋषिः, अनुष्टुप्छन्दः, आद्या शक्तिः, भगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, ह्रूं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं अमुककामना सिद्ध्यर्थे पाठे विनियोगः ॥

॥ ॐ ॥

अथ कर न्यास:

ॐ इकवीरायै अङ्गुष्ठाभ्यां नमः, ॐ महा-
मायायै तर्जनीभ्यां नमः, ॐ पार्वत्यै मध्य-
माभ्यां नमः, ॐ गिरिप्राप्रियायै अनामि-
काभ्यां नमः, ॐ गौर्यै कनिष्ठिकाभ्यां नमः॥
ॐ करालिन्यै कर तल करपृष्ठाभ्यां नमः॥

अथ षडङ्ग न्यास:॥

ॐ इकवीरायै हृदयाय नमः ॐ महा-
मायायै शिरसे स्वाहा। ॐ पार्वत्यै शिखायै
वषट्, ॐ गिरिप्राप्रियायै कवचाय हुं।
ॐ गौर्यै नेत्रत्रयाय वौषट्, ॐ करालिन्यै
अस्त्राय फट्॥ ॐ प्राणायाम: ॐ॥

॥अथ ध्यानम्॥

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्।
पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे॥
अर्धेन्दुमौलिममलाममराभिवन्द्याम्,
अम्भोजपाशसृणिरक्तकपालहस्ताम्॥
रक्ताङ्गरागरशनाभरणां त्रिनेत्रां
ध्याये शिवस्य वनितां मधुविह्वलाङ्गीम्॥
॥ॐ बीजत्रयाय विद्महे, तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात्॥ मूलम्॥
"ॐ श्रीं श्रीं ॐ ॐ ह्रीं श्रीं श्रीं सकालि
हुं फट् स्वाहा"॥
॥ॐ॥

ॐ श्री ईश्वर उवाच ॥

ॐ महाविद्या जगन्माता महालक्ष्मी शिवप्रिया।
विष्णुमाया शुभा शान्ता सिद्धा सिद्धसरस्वती ॥१
क्षमा कान्ति: प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला ॥
हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मी हरिप्रिया ॥२
त्रिपुरानन्दिनी नन्दा सुनन्दा सुरवन्दिता ॥
यज्ञविद्या महामाया वेदमाता सुधा धृति ॥ ३ ॥
प्रीतिप्रिया प्रसिद्धा च मृडानी विन्ध्यवासिनी ॥
सिद्धविद्या महाशक्ति: पृथ्वी नारदसेविता ॥४
पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना।
प्रह्लादिनी महामाता दुर्गा दुर्गतिनाशिनी ॥५॥
ज्वालामुखी सुगोत्रा च ज्योति: कुमुदहासिनी।

दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी ॥६॥
अपर्णा प्राम्बी माया मदिरा मृडहासिनी ।
कुलवागीश्वरी नित्या नित्याक्लिन्ना कृशोदरी ॥७॥
कामेश्वरी च नीला च भीरुण्डा वह्निवासिनी ॥
लम्बोदरी महाकाली विद्याविद्येश्वरी तथा ॥८॥
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी ॥
सङ्कर्षणी नारसिंही वैष्णवी च महोदरी ॥९॥
कात्यायनी च चम्पा च सर्वसम्पत्तिकारिणी ॥
नारायणी महानिद्रा योगनिद्रा प्रभावती ॥१०॥
प्रज्ञापारमिता प्रज्ञा तारा मधुमती मधु ॥
ॐ श्रीराज्ञीकुलाहाला कालिका सिंहवाहना ॥११॥
श्रीराज्ञीवतनुता हाला कालिका सिंहवाहना ॥११॥

ॐकारा चतुराहारा चेतना कोपना कृतिः।

अर्धबिन्दुधराधारा विश्वमाता कलावती॥१२

पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती॥

कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी॥१३॥

जिनमाता जिनेन्द्रा च शारदा हंसवाहना॥

राज्यलक्ष्मी वषट्कारा सुधाकारा सुधात्मिका॥१४

राजनीतिस्त्रयीवार्ता दण्डनीतिः क्रियावती॥

सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा॥१५

सिन्धुर्मन्दाकिनी गङ्गा यमुना च सरस्वती।

गोदावरी विपाशा च कावेरी च शतद्रुका॥१६

सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः॥

नर्मदा कर्मनाशा च चर्मण्वती च देविका॥१७॥

22 MAY 1973 TUESDAY

Saka 1 Jyesth 1895

मंगलवार २२ मई ज्येष्ठ बदी ५

वेत्रवती वितस्ता च वरदा नरवाहना ।

सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी ॥१८॥

एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी ।

सेनाश्रेणिः पताका च सुव्यूहा युद्धकांक्षिणी ॥१९॥

पताकिनी दयारम्भा विपञ्ची पञ्चमप्रिया ।

परापरकलाकान्ता त्रिशक्तिर्मोक्षदायिनी ॥२०॥

ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी ।

इच्छा भगवती शक्तिः कामधेनुः कृपावती ॥२१॥

वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा ॥

गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी ॥२२॥

एकानेका महेज्या च शतबाहु महाभुजा ॥

भुजंगभूषणा भूषा षट्चक्रक्रमवासिनी ॥२३॥

षट्चक्रभेदिनी शूरा कायस्था कायवर्जिता ॥
सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी ॥२४॥
अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी ।
रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा ॥२५॥
क्षुधा तृष्णा जरा वृद्धा तरुणी करुणालया ॥
कला काष्ठा मुहूर्ता च निमेषा कालरूपिणी ॥२६॥
सुवर्णरसनानासा चक्षुः स्पर्शवती रसा ॥
गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः ॥२७॥
मृगनाभि मृगाक्षी च कर्पूरामोदधारिणी ॥
पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी ॥२८॥
योनिमुद्रा महामुद्रा खेचरी खगगामिनी ॥
मधुश्रीर्माधवी वल्ली मधुमत्ता मदोद्धता ॥२९॥

मातङ्गी शङ्खहस्ता च पुष्पबाणेक्षुचापिनी॥
रक्ताम्बरधरा क्षीबा रक्तपुष्पावतंसिनी॥ ३०॥
शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया॥
सुवेणी पद्महस्ता च मुक्ताहारविभूषिता॥ ३१॥
कर्पूरामोदनिश्वासः पद्मिनी पद्ममन्दिरा॥
खड्गिनी चक्रहस्ता च भुसुण्डी परिघायुधा॥ ३२॥
चापिनी पाशहस्ता च त्रिशूलवरधारिणी॥
सुबाणा शक्तिहस्ता च मयूरवरवाहना॥ ३३॥
वरायुधधरा वीरा वीरपानमदोत्कटा॥
वसुधा वसुधारा च जया शाकम्भरी शिवा॥ ३४॥
विजया वैजयन्ती च सुस्तनी शत्रुनाशिनी॥
अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी॥ ३५॥

शीतला च सुशीला च बालग्रह विनाशिनी ॥
कौमारी च सुपर्णा च कामाख्या कामवन्दिता ॥ २५ ॥
जालंधरधरानंता कामरूपनिवासिनी ।
कामबीजवती सत्या सत्यधर्मपरायणा ॥ २६ ॥
स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी ॥
षट्कोणा च त्रिकोणा च त्रिनेत्रा वृषभध्वजा ॥ २७ ॥
वृषप्रिया वृषारूढा महिषासुरघातिनी ॥
शुम्भदर्पहरा दीप्ता दीप्तपावकसंनिभा ॥ २८ ॥
कपालभूषणा काली कपालमालधारिणी ॥
कपालकुण्डला दीर्घा शिवदूती घनध्वनि ॥ २९
सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी ॥
कंबुग्रीवा वसुमती छत्रच्छायाकृतालया ॥ ३० ॥

जगद्भ्रमी कुण्डलिनी भुजगाकारशायिनी ॥
प्रोल्लसत्सप्तपद्माच नाभिनालमृणालिनी ॥४१
मूलाधारा निराकारा वह्निकुण्डकृतालया ॥
वायुकुण्डसुखासीना निराधारा निराश्रया ॥४२
श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वह्निसंश्रया ॥
वल्लीतन्तुसमुत्थाना षड्रसास्वादलोलुपा ॥४३॥
तपस्विनी तपःसिद्धिस्तपस्या सिद्धिदायिनी ॥
तपोनिष्ठा तपोयुक्ता तापसी च तपःप्रिया ॥४४
सप्तधातुमयीमूर्तिः सप्तधात्वंतराश्रया ॥
देहपुष्टिर्मनःपुष्टिरन्नपुष्टिर्बलोद्धता ॥४५
ओषधिर्वैद्यमाता च द्रव्यशक्तिप्रभावती ॥
वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी ॥४६

मृगया मृगमांसादा मृगत्वङ् मृगलोचना॥
वागुरा बंदरूपा च वधरूपा वधोद्धता॥४७॥
वंदी वंदिस्तुता कारा काराबंधविमोचिनी॥
शृंखला खलहा विद्युद् दृढबंधविमोचिनी॥४८॥
अम्बिकाम्बालिका चाम्बा स्वक्षा साधुजनार्चिता॥
कौलिकी कुलविद्या च सुकुला कुलपूजिता॥४९॥
कालचक्रभ्रमा भ्रांता विभ्रमा भ्रमनाशिनी॥
वात्याली मेघमाला च सुवृष्टिः सस्यवर्धिनी॥५०॥
अकारा च इकारा च उकारे काररूपिणी॥
ह्रींकारी बीजरूपा च क्लींकाराम्बरवासिनी॥५१॥
सर्वाक्षरमयी शक्तिरक्षरा वर्णमालिनी॥
सिंदूरारुणवर्णा च सिंदूरतिलकप्रिया॥५२॥

वश्या च वश्यबीजा च लोकवश्यविभाविनी ॥
नृपवश्या नृपसेव्या नृपवश्यकरीप्रिया ॥ ५३ ॥
महिषी नृपमान्या च नृमान्या नृपनन्दिनी ॥
नृपधर्ममयी धन्या धनधान्यविवर्धिनी ॥ ५४ ॥
चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैः सुपूजिता ॥
सर्वधर्ममयी सिद्धिश्चतुराश्रमवासिनी ॥ ५५ ॥
ब्राह्मणी क्षत्रिया वैश्या शूद्रा चावरवर्णजा ॥
वेदमार्गरता यज्ञा वेदविश्वविभाविनी ॥ ५६ ॥
अस्त्रशस्त्रमयी विद्या वरशस्त्रास्त्रधारिणी ॥
सुमेधा सत्यमेधा च भद्रकाल्यपराजिता ॥ ५७ ॥
गायत्री सत्कृतिः संध्या सावित्री त्रिपदाश्रया ॥
त्रिसंध्या त्रिपदी धात्री सुपर्वा सामगायनी ॥ ५८ ॥

स्वच्छा ना ग्रामस्थाना स्वच्छा स्वस्थानवासिनी।
१ अट्टाट्टहासिनी प्रेक्षा प्रेमासम्पन्नवासिनी।
गीतनृत्तप्रिया कामा तुष्टिदा पुष्टिदा क्षया॥
मंगलवार २६ मई ज्येष्ठ वदी १२
पञ्चाली बालिका बाला बालाक्रीडा सनातनी॥
गर्भाधारधराशून्या गर्भाशयनिवासिनी॥ ५९॥
सुरारिघातिनी कृत्या पूतना च तिलोत्तमा॥
लज्जा रसवती नंदा भवानी पापनाशिनी॥ ६०॥
पट्टाम्बरधरा गीतिः सुगीतिर्ज्ञानलोचना॥
सप्तस्वरमयी तंत्री षड्जमध्यमदैवता॥ ६१॥
...मैथुन... कामा तुष्टिदा पुष्टिदा क्षया॥
निष्ठा सत्यप्रिया प्रख्या लोकेशी सुरोत्तमा॥ ६२॥
सविषा ज्वालिनी ज्वाला विषमोहार्तिनाशिनी॥
रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः॥ ६३॥
चंद्रिका चंद्रकान्तिश्च सूर्यकान्तिर्निशाचरी॥
डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी॥ ६४॥
...मिता... ...री... ...सुरेश्वरा॥

भूतभीतिहरा रक्षा भूतावेशविनाशिनी॥

सितासितप्रिया स्वच्छा सुकला वनदेवता ॥
गुरुरूपधरा गुर्वी मृत्युमारी विशारदा ॥६५॥
महामारी विनिद्रा च तन्द्रा मृत्युविनाशिनी ।
चन्द्रमण्डलसङ्काशा चन्द्रमण्डलवासिनी ॥६६॥
अणिमादिगुणोपेता सुस्पृहा कामरूपिणी ।
अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ॥६७॥
अनादिनिधना पुष्टिश्चतुर्बाहुश्चतुर्मुखी ॥
चतुःसमुद्रशयना चतुर्वर्गफलप्रदा ॥६८॥
काशपुष्पप्रतीकाशा शरत्कुमुदलोचना ॥
भूता भव्या भविष्या च शैलजा शैलवासिनी ॥
वाममार्गरता वामा शिववामाङ्कवासिनी ॥
वामाचारप्रिया तुष्टिर्लोपामुद्रा प्रबोधिनी ॥७०॥

भूतात्मा परमात्मा च भूतभव्यविभाविनी ।
मङ्गला सुसाधुशीला: परमार्थप्रबोधिका ॥७१॥
दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रिया ।
योगिनी योगयुक्ता च योगाङ्गा ध्यानशालिनी ॥७२॥
योगपट्टधरा मुक्ता मुक्तानां परमागतिः ॥
नारसिंही सुजन्मा च त्रिवर्गफलदायिनी ॥७३॥
धर्मदा धनदा चैका कामदा मोक्षदद्युति ॥
साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूप-
क्रतुः कात्यायनी स्वच्छा स्वच्छन्दा च कविप्रिया ॥
सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा ॥
मेनापुत्री सती माता मैनाकभगिनी तडित् ॥
सौदामिनी सुधामा च सुधामा धामशालिनी ॥७४॥

सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्धिनी।
श्रीकृत्तिवसना चैव कङ्काली कलिनाशिनी॥७७॥
रक्तबीजवधोद्दृप्ता सुतन्तुबीजसंततिः।
जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी॥७८॥
चामीकररुचिश्चान्द्री साक्षया षोडशीकला॥
यत्तत्पदानुबद्धा च यक्षिणी धनदार्चिता॥७९॥
चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी॥
चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा॥८०॥
अष्टमे कादशी पूर्णा नवमी च चतुर्दशी॥
उमा कलशहस्ता च पूर्णकुम्भपयोधरा॥८१॥
अभीरुर्भैरवी भीरा भीमा त्रिपुरभैरवी॥
महारुण्डा च रौद्री च महाभैरवपूजिता॥८२॥

निर्मुण्डा हस्तिनी चण्डा कराल दशनानना ॥
कराला विकराला च घोर घुर्घुरनादिनी ॥ ८३ ॥
रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा ॥
कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया ॥ ८४ ॥
क्षान्तिर्बाहुसुवर्णा च मतिर्बाहुसुवर्णदा ॥
मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी ॥ ८५ ॥
हिंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा ॥
पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुन्तला ॥ ८६ ॥
मषी च लेखनी लेखा सुलेखा लेखकप्रिया ॥
शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता ॥ ८७ ॥
कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्तिका ॥
अयोध्या द्वारिका माया तीर्था तीर्थकरप्रिया ॥ ८८ ॥

त्रिपुष्करा प्रमेया च कोशस्था कोशवासिनी॥
कौशिकी तु कुशावर्ती कोशाम्बी कोशवर्धिनी॥ ५९
कोशदा पद्मकोशाक्षी कुसुम्भकुसुमप्रिया॥
तोतुला च तुलाकोटिः कोटिस्था कोटराश्रया॥ ६०
स्वयम्भूश्च सुरूपा च सुरूपा रूपवर्धिनी॥
तेजस्विनी सुभिक्षा च बलदा बलदायिनी॥ ६१॥
महाकोशी महावर्ता बुद्धिः सदसदात्मिका॥
महाग्रहहरा सौम्या विशोका शोकनाशिनी॥ ६२
सात्त्विकी सत्त्वसंस्था च राजसी च रजोवृता॥
तामसी च तमोयुक्ता गुणत्रयविभाविनी॥ ६३॥
अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी॥
शम्भुकल्पाशिनी कल्पा मनः सङ्कल्पसन्ततिः॥
॥ ६४॥

4 JUNE 1973 MONDAY

जाग्रतीच सुषुप्तिश्च स्वप्नावस्था तुरीयका।

सोमवार ४ जून ज्येष्ठ सुदी ४

सर्वलोकमयी प्रकृतिः सर्वश्रवणगोचरा।
सर्वज्ञानवती वाञ्छा सर्वतत्त्वावबोधिनी॥ ९५॥
त्वरा मन्दगतिर्मन्दा मदिरामोद धारिणी॥
पानभूमिः पानपात्रा पानदानकरोद्यता॥ ९६॥
अघूर्णारुणनेत्रा च किञ्चिदव्यक्तभाषिणी।
आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता॥ ९७॥
नागवल्ली नागकन्या भोगिनी भोगवल्लभा॥
सर्वशास्त्रवती विद्या सुस्मृतिर्धर्मवादिनी॥ ९८॥
श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी॥
मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला॥ ९९॥
सुनाभिर्यातनाजातिर्गम्भीरा भाववर्जिता॥
नागपाशधरा मूर्तिरगाधा नागकुण्डला॥ १००॥

सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी॥
सर्वमंत्रमयी विद्या सर्वमंत्राक्षरावलिः॥१०१॥
मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका॥
मातृमण्डलमध्यस्था मातृमण्डलवासिनी॥२॥
कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी॥
अतीता विद्यमाना च भाविनी प्रीतिमंजरी॥३॥
सर्वसौख्यवती युक्तिराहार परिणामिनी॥
निधाने पंचभूतानां भवसागर तारिणी॥४॥
अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता॥
रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी॥५॥
कलंकरहिता नारी चतुष्षष्ट्यभिधावती॥
जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा॥६॥

अजरा नियतिः प्रीतिरतिरागविवर्धिनी।
पंचवातगतेर्भिन्ना पंचश्लेष्मापराधरा॥१०७॥
पंचपित्तवती पंक्तिः पंचस्थानविभाविनी।
ऋतुमती कामवती बर्हि प्रसविनी-त्र्यहा॥१०८॥
रजः शुक्रधरा शक्तिर्जरायुगर्भधारिणी॥
त्रिकालज्ञा त्रिलिंगा च त्रिमूर्तिः पुरवासिनी॥१०९
अरागा शिवतत्त्वा च कामतत्त्वानुरागिणी॥११०॥
प्राच्यवाची प्रतीचीदिगुदीचीदिग्विदिग्दिशा॥
अहंकृतिरहंकारा बलिमाया बलिप्रिया॥१११॥
स्रुक्स्रुवा सामिधेनी च सश्रद्धा श्राद्धदेवता॥
माता मातामही तृप्तिः पितृमाता पितामही॥११२
स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया॥
स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी॥

शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी॥
उर्वशी कदली केका विशिखा शिखिवर्तिनी॥
खट्वाङ्गधारिणी खड्गबाणपुङ्खानुवर्तिनी।
लक्ष्यप्राप्तिः कला लक्ष्या लक्ष्या च शुभलक्षणा॥११४॥
वर्तिनी सुपथाचारा परिखा च खनिर्वृत्तिः।
प्रकारा वलया वेला मर्यादा च महोदधिः॥११५॥
पोषणी शोषणी शक्तिर्दीर्घकेशी सुलोमशा॥
ललिता मांसला तन्वी वेदवेदाङ्गधारिणी॥११६॥
नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा॥
अक्षक्रीडारतिः शारी शारिका शुकभाषिणी॥
शाम्बरी गारुडी विद्या वारुणी वरुणार्चिता॥
वाराही तुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा॥११७॥

मौनमूर्तिधरा मूर्ता वदान्या प्रतिमाश्रया॥
अष्टमूर्तिर्निचोपुष्टा च शालिग्राम शिला स्तुतिः॥
स्तुतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः॥ ॥
प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका॥२०
इडा च पिङ्गला पिङ्गा सुषुम्ना सूर्यवाहिनी॥
शशिस्रवा च तालुस्था काकिनी मृतजीविनी॥
अणुरूपा बृहद्रूपा लघुरूपा गुरुः स्थिरा॥
स्थावरा जङ्गमा देवी कृतकर्मफलप्रदा॥१२२
विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया॥
विश्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी॥१२३
निर्विकारा च निर्वैरा विरतिः सत्त्ववर्धिनी॥
पुरुषाज्ञानभिन्ना च क्षान्तिः कैवल्यदायिनी॥१२

विविक्तसेविनी प्रज्ञाजनयित्री बहुश्रुतिः॥
निरीहा च समस्तेहा सर्वलोकैकसेविता॥१२४॥
सेवा सेवाप्रिया सेव्या सेवफलविवर्धिनी॥
कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी॥१२५॥
प्रत्यञ्चा च धनुर्यष्टिः खड्गधारा दुरानतिः॥
अश्वप्लुतिश्च वल्गा च सृणिः सन्मत्तवारणा॥१२६॥
वीरभूर्वीरमाता च वीरसूर्वीरनन्दिनी॥
जयश्रीर्जयदीक्षा च जयदा जयवर्धिनी॥
सौभाग्यसुभगाकारा सर्वसौभाग्यवर्धिनी॥
क्षेमङ्करी सिद्धिरूपा सत्कीर्तिः पथिदेवता॥१२७॥
सर्वतीर्थमयीमूर्तिः सर्वदेवमयीप्रभा॥
सर्वसिद्धिप्रदाशक्तिः सर्वमङ्गलमङ्गला॥
॥१२८॥

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् ॥
चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ॥
नातः परतरो मंत्रो नातः परतरः स्तवः ॥
नातः परतरा विद्या तीर्थं नातः परं परम् ॥
ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः ॥
एकभावं मुदा नित्यं ये चर्चयन्ति महेश्वरीम् ॥
देवतानां देवता या ब्रह्माद्यै या च पूजिता ॥
भूयात्सा वरदा लोके साधूनां विश्वमंगला ॥
एतामेव पुराराध्य विद्यां त्रिपुरभैरवीम् ॥
त्रैलोक्यमोहनं रूपमकार्षीद् भगवद्धरिः ॥
मायाकुण्डली० अनेन मंत्रपाठेन आत्मनः०
इति श्रीरुद्रयामले तन्त्रे नन्दिकेश्वरसंवादे
महाप्रभावो भवानीनामसहस्रस्तवराजः
समाप्तः ॥ ॐ ॥

अथ इन्द्राक्षीस्तोत्रम् ॥

ॐ अस्य श्री इन्द्राक्षीस्तोत्रमंत्रस्य, पुरन्दर ऋषिः अनुष्टुप् छन्दः, श्रीइन्द्राक्षी भगवती देवता, ह्रीं बीजं, भुवनेश्वरी शक्तिः, माहेश्वरी कीलकं, गायत्रीसावित्रीसरस्वती कवचं, अस्मिन् इन्द्राक्षी पाठे विनियोगः ॥

लक्ष्म्यै अङ्गुष्ठाभ्यां नमः, भुवनेश्वर्यै तर्जनीभ्यां नमः, माहेश्वर्यै मध्यमाभ्यां नमः, वज्रहस्तायै अनामिकाभ्यां नमः, सहस्रनयनायै कनिष्ठिकाभ्यां नमः, इन्द्राक्षी भगवत्यै करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥

12 JUNE 1973 TUESDAY

Saka 22 Jyesth 1895

मंगलवार १२ जून ज्येष्ठ सुदी १२

अथ षडङ्गन्यासः ॥

ॐ लक्ष्म्यै हृदयाय नमः, भुवनेश्वर्यै शिरसे स्वाहा, माहेश्वर्यै शिखायै वषट् । ब्रह्महत्यायै कवचाय हुं, सहस्रनयनोर्यै नेत्राभ्यां वौषट्, इन्द्राक्षीभगवत्यै अस्त्रायफट्

प्राणायामः

ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम् ॥
वामे वज्रधरां सव्यहस्तेऽभयवरप्रदाम् ॥
सहस्रनेत्रां सूर्याभां नानालङ्कारभूषिताम् ॥
प्रसन्नवदनां नित्यामप्सरोगणसेविताम् ॥
श्रीद्विभुजां सौम्यवदनां पाशाङ्कुशधरां पराम् ॥
त्रैलोक्यमोहिनीं देवीं भवानीं प्रणमाम्यहम् ॥

श्री इन्द्र उवाच॥

वृन्द्राक्षी नाम सा देवी देवता समुदाहृता॥
गौरी शाकंभरी देवी दुर्गा नाम्नेति विश्रुता॥
कात्यायनी महादेवी चण्डघंटा महातपा॥
सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी॥
नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला॥
अग्निज्वाला रुद्रमुखी कालरात्री तपस्विनी॥
मेघश्यामा सहस्राक्षी विष्णुमाया जलोदरी॥
महोदरी मुक्तकेशी घोररूपा महाबला॥
आनन्दा भद्रजा नन्दा रोगहर्त्री शिवप्रिया॥
शिवदूती करालीच प्रत्यक्षपरमेश्वरी॥
इन्द्राणी चेन्द्ररूपा च इन्द्रशक्तिः परायणा॥

महिषासुरसंहर्त्री चामुण्डा नाम देवता॥
वराही नारसिंही च भीमा भैरवनादिनी॥
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती।
अनन्ता विजया पूर्णा मनस्तोषा पराजिता॥
भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा।
शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी॥
एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता।
आयुरारोग्यमैश्वर्याक्षयसम्पत्तिकारकम्॥
क्षयापस्मारकुष्ठादितापज्वरनिवारकम्॥
प्रातरावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात्॥
आवर्तयेत्सहस्रेण लभते वाञ्छितं फलम्॥
राजानं वशमवाप्नोति सत्यमेव न संशयः॥

लक्ष्मि के जपेद्यस्तु साक्षाद्देवी स पश्यति॥
त्रिकाले पठते नित्यं धनधान्यादि सम्पदः॥
अर्धरात्रे पठेन्नित्यं मुच्यते व्याधिबंधनात्॥
ऐं ह्रस्तोत्रमिदं पुण्यं जपेत् फलवर्धनम्॥
विनाशाय तु रोगाणामपमृत्युहराय च॥
राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम्।
इच्छाकामं तु कामार्थी धर्मार्थी धर्ममव्ययम्।
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम्॥
इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः॥
ॐ या माया मधुकैटभप्रमाथिनी या मा-
हिषोन्मूलिनी, या धूम्रेक्षणचण्डमुण्डमथि-
नी या २ क्त बीजाशनी॥ शक्तिः शुम्भ-

निशम्भुदैत्यदलिनी या सिद्धलक्ष्मी परा,
सा देवी नवकोटिमूर्तिसहिता मां पातु
माहेश्वरी ॥
जप्तं पापहरं नुतं बलकरं सम्पूजितं श्रीकरं,
ध्यातं मानकरं हुतं धनकरं सम्भाषितं
सिद्धिदम् ॥ गीतं सुन्दरि वाञ्छितं प्रतनुते
ते पादपद्मद्वयं भक्तानां भवभीतिभञ्जन
करं सिद्ध्यष्टदं पातु नः ॥ तर्पणम् ॥
माया कुण्डलिनी क्रिया मधुमती काली
कला मालिनी, मातङ्गी विजया जया
भगवती देवी शिवा शाम्भवी ॥
शक्तिः शाङ्करवल्लभा त्रिनयना वाग्वा-

दिव्ली भैरवी, ह्रींकारी त्रिपुरा परापरमयं
माता कुमारीत्यहि ॥
अनेन मन्त्रपाठेन आत्मनो वाङ्मनः
कायोपार्जितपाप निवारणार्थं श्री
इष्टदेवी श्शारिकाभगवती प्रीत्यर्थं
भगवती, अमा, कामा, चार्वङ्गी, टङ्क
धारिणी, तारा, पार्वती, यक्षिणी,
श्री श्शारिकाभगवती, श्री श्शारदाभगव
ती, श्री महाराज्ञी भगवती, श्री ज्वाला
भगवती, क्रीडाभगवती, वैखरीभगवती,
वितस्ताभगवती, गङ्गाभगवती, यमुना
भगवती, कालिकाभगवती, सिद्धलक्ष्मी,

महात्रिपुरसुन्दरी, सहस्रमा श्री देवी भवानी सपरिवारा, सवहना, सायुधा साङ्गा प्रीयतां प्रीतास्तु ॥
इति इन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

अथ शारिका कवचम् ॥
श्री भैरव उवाच ॥
ॐ अधुना श्रृणु देवेशि शारिका कवचं परम्।
त्रैलोक्यमोहनं नाम मूलमंत्रमये परम् ॥
अस्य श्रवणमात्रेण सर्वयज्ञफलं लभेत ॥
सर्वापत्तारणं दिव्यं सर्वसिद्धिप्रदं कलौ ॥
सर्वस्वं मे रहस्यं मे परमं परमाद् भुतम् ॥

धारणादस्य देवेशि विष्णुना स जलोद्भवः॥
दानवेन्द्रो हतः शीघ्रमन्धकारो यथेन्दुना॥
मयापि त्रिपुराध्यक्षो दानवो जिष्णुनाबल॥
जम्भो वृत्रासुरो देवि प्रभावादस्य वर्मणः॥
कवचस्यास्य देवेशि ऋषिर्भैरव ईरितः॥
त्रिष्टुप्छन्दो देवता च त्रैलोक्यमोहिनीश्वरी॥
श्रीरेका प्रामबीजं च मायाशक्तिः कीलकं गज॥
त्रैलोक्यमोह विद्यार्थं विनियोगः प्रकीर्तितः॥
ॐ मे दुर्गा शिरः पायादेकाक्षर विभूषणा॥
ॐ ह्रीं चण्डीललाटं मे जगदुल्लासरूपिणी॥
ॐ ह्रीं श्रीं त्र्यक्षरा पातु भ्रुवौ मे भगमालिनी॥
ॐ ह्रीं श्रीं हूं च नेत्रे ऽव्यात्सर्वसकलनामकृत्॥

ॐ ह्रीं श्रीं हूँ फ्रां अम्ब्यान्मे श्रुती शङ्कर वल्लभा ॥
ॐ ह्रीं श्रीं हूँ फ्रां अं पातु नासां नारायणेश्वरी ॥
ॐ ह्रीं श्रीं हूँ फ्रां अं प्रां मे पातु वक्त्रं सरस्वती ॥
अं आं इं ईं रदान्पातु मातृकाक्षरेश्वरी ॥
उं ऊं ऋं ॠं लृं लॄं एं ऐं पायादोष्ठौ भवप्रिया ॥
ओं औं अं अः गलं पातु नीलकण्ठासनेश्वरी ॥
कं खं गं घं ङं मे पातु स्कन्धौ स्कन्दसमार्चिता ॥
चं छं जं झं ञं मे पायाद्वक्षो वामप्रियाम्बिका ॥
टं ठं डं ढं णं मे पायात्पार्श्वौ पर्वतनन्दिनी ॥
तं थं दं धं नं मे पातु कुक्षिं कुलाकुलेश्वरी ॥
पं फं बं भं मं मे पातु नाभिं नारदसेविता ॥
यं रं लं वं गुदं पातु गुह्यकेश्वर पूजिता ॥

21 JUNE 1973 THURSDAY

Saka 31 Jyesth 1895

गुरुवार २१ जून आषाढ़ बदी ५

ष्रां षं हं हं कटिं पातु देवी कात्यायनी तथा
हुं क्षं ऊरू सदा पातु सर्वसारस्वतप्रदा ॥
ॐ श्रां जानू शिवा पातु ॐ ॐ जंङ्घे वतादुमा ॥
ॐ फ्रां पादौ सदा पातु राजमातङ्गिनी मम।
ॐ हूं पादादिमूर्धान्तं वपुर्मे पातु कुब्जिका ॥
ॐ श्रीं मूर्धादिपादान्तं वपुर्मे पातु शारदा ॥
ॐ ह्रीं स प्राक्षरो पातु शारिका सकलं वपुः
पूर्वे मां पातु ब्रह्माणी वह्नौ मे वैष्णवी सदा।
दक्षिणेऽवतु मां चण्डी नैरृते मेऽपराजिता ॥
पश्चिमेऽवतु कौमारी वायव्ये शाम्भवी च मम ॥
वाराही चोत्तरे पायादीशाने नारसिंहिका ॥
प्रभाते मामुमा पातु मध्ये कामाक्षा ...

चार्वङ्गी मां दिनान्तेऽव्यान्निशादौ टङ्कधारिणी ॥
निशीथेऽव्यादुग्रतारा निशान्ते पार्वती च माम् ॥
सर्वत्र यक्षिणी पातु शिवा मां पातु सर्वदा ॥
असिताङ्गः क्षितेः पातु रुरुर्मां पातु पाथसः ॥
चण्डो मां पातु मरुतः क्रोधोऽव्यान्मां हुताशनात् ॥
उन्मत्तः सोमतः पातु कपाली सूर्यतोऽवतु ॥
भीषणो यज्ञविद्यात्तु संहारः शून्यमण्डलात् ॥
रणे मां कालिका पातु द्यूते त्रिपुरसुन्दरी ॥
दुर्गाऽवतु विवादे वा श्रीचक्रे सर्वदाऽवतु ॥
सर्वत्र सर्वदा देवी पातु मां शारिका परा ॥
धनं पुत्रं सुतान्दारान् गृहं यच्चात्तु मामकम् ॥
तत्तन्मम शिवः पातु वामदेवश्चिदीश्वरः ॥

इत्येतत्कवचं दिव्यं त्रिषु लोकेषु दुर्लभम्॥
त्रैलोक्यमोहनं नाम शारिकाया रहस्यकम्॥
विनाऽमुना न सिद्धिः स्यात्कवचेन्द्रेण पार्वति॥
कोटिलक्ष्य प्रजप्तस्य मन्त्रस्यास्य महेश्वरि॥
तस्मात्पठेद्धि वै वर्म मनुगमम ऽनुक्षणम्॥
सर्वोत्पातप्रशमनं बलबुद्धिप्रवर्धनम्॥
परमानन्ददं लोके परमैश्वर्यकारणम्॥
यः पठेत्पाठयेद्वापि शृणोति श्रावयेदपि॥
स एव भैरवाध्यक्षस्त्रैलोक्यविजयी विभुः॥
रवौ भूर्जे लिखेद्वर्म स्वयम्भूकुसुमस्रजा॥
कुसुमेनाष्टगन्धेन स्तन्येन निजरेतसा॥
धारयेन्मूर्ध्नि वा बाहौ प्राप्नुयात्परमां गति

-म्॥

धनकामी लभेद्वित्तं पुत्रकामी लभेत्प्रजाम् ॥
रणे रिपून्नरो हत्वा कल्याणी गृहमाविशेत् ॥
धृत्वा वक्षसि देवेशि वाग्मित्वं जायते क्षणात् ॥
वन्ध्या च काकवन्ध्या च मृतवत्सा लभेत्सुतान् ॥
मार्कण्डेया युषो देवि साक्षाद्वैश्रवणोपमान् ॥
किं किं न लभते मर्त्यः पठन्कवचमुत्तमम् ॥
यः पठेदर्धरात्रे तु श्मशाने मुक्तकुन्तलः ॥
पीत्वा प्रौढं स देवेशि देवीदर्शनमाप्नुयात् ॥
स्तम्भयेद्भास्करं वायुं मोहयेत् त्रिजगद्वशम् ॥
बहु किं कथ्यते तस्य कवचस्यास्य धारणात् ॥
पठनाद्धारणाद्वापि स भवेद्भैरवोपमः ॥
इतीदं कवचं देवि त्रैलोक्यवशकारणम् ॥

त्रैलोक्यमोहनं नाम गोपनीयं सुरेश्वरि॥
यस्य कस्य न दातव्यं विना शिष्येण पार्वति॥
दीक्षिताय कुलीनाय दत्वा मोक्षमवाप्नुयात्॥
विना दानं न गृह्णीयान्न दद्याद्दक्षिणां विना॥
दत्वा गृहीत्वाऽप्युभयोः सिद्धिहानिर्भवेद्ध्रुवम्॥
अन्यथा यस्तु गृह्णीयाद्दद्याद्वा कवचेश्वरम्॥
पुत्रान्दारान्सुतांश्चैव योगिन्यो भक्षयन्ति तम्॥
अज्ञात्वा कवचं देवि पूजयेच्छ्रीशिलां शिवे॥
स भवेच्छिवद्रोही सत्यं सर्वापद्रवसंकुलः॥
धृत्वा यः कवचं देवि पूजयेच्छ्रीशिलां शिवे॥
स एव परमां सिद्धिं लभते नात्र संशयः॥
इतीदं कवचं देवि सारं सर्वस्वमुत्तमम्॥

रहस्यं शारिकारत्नं गोपनीयं स्वयोनिवत्॥

इति श्रीरुद्रयामले तन्त्रे शारिका-

कवचं समाप्तम्॥



